

SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume:9, Issue:5
August-2022, Price Rs.5/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

सचित्रमासपत्रिका

आगस्ट् २०२२
रू/- ५/-

ओमित्येकाक्षरं ब्रह्म
व्याहरन्मामनुस्मरन्।
यः प्रयाति त्यजन्देहं
स याति परमां गतिम्॥

(सप्तश्लोकी भगवद्गीता)

SIVAPRASAD

तिरुपतिसमीपे पातकाल्व (पेरूरु बण्ड) ग्रामे वकुळमातुः आलये आचरितमहासम्प्रोक्षणदृश्यानि। तत्र च आन्ध्रप्रदेशस्य मान्यमुख्यमन्त्रिणः श्री वै.यस्.जगन्मोहन् रेड्डि, मन्त्रिणः श्री पेद्दिरेड्डि रामचन्द्रारेड्डि, ति.ति.दे., कार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि ऐ.डि.ई.एस्., ति.ति.दे., संयुक्तकार्यनिर्वहणाधिकारिणः श्री वि.वीरब्रह्मम् ऐ.ए.एस्., तथा श्रीमती एस्.भार्गवी ऐ.ए.एस्., तदितराधिकारिणश्च भागिनः अभवन्।

















# गीतामृतम्



दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः।।
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन।
नरके नियतं वासो भवतीत्यनुशुश्रुम।। (भगवद्गीता ४१/४२-१)

अर्जुनः श्रीकृष्णं प्रति वदति, ''हे जनार्दन! वर्णसङ्करकारणीभूतैः कुलनाशकानां दोषैः परम्परया प्राप्ताः वर्णधर्माः, आश्रमधर्माः अपि लुप्यन्ते। तेषां च जातिधर्मादिकुलाचारविहीनानां मनुष्याणां निवासः निश्चयेन नरकमेव भवतीति वयं श्रुतवन्तः। अतः तादृशानिष्टदायकं युद्धं न कर्तुमिच्छामि'' इति।

# सङ्कीर्तनम्

नवनीतचोर नमो नमो
नवमहिमार्णव नमो नमो ।।नव।।
हरिनारायण केशवाच्युत श्रीकृष्ण
नरसिंह वामन नमो नमो
मुरहर पद्मनाभ मुकुन्द गोविन्द
नरनारायणरूप नमो नमो ।।नव।।
निगमगोचर विष्णुनीरजाक्ष वासुदेव
नगधर नन्दगोप नमो नमो
त्रिगुणातीत देव त्रिविक्रम द्वारक
नगराधिनायक नमो नमो ।।नव।।
वैकुण्ठ रुक्मिणिवल्लभ चक्रधर
नाकेशवन्दित नमो नमो
श्रीकर गुणनिधिश्रीवेङ्कटेश्वर
नाकजननुत नमो नमो ।।नव।।

(अन्नमाचार्यसङ्कीर्तनम्)





# श्रावण महालक्ष्म्याः वैशिष्ट्यम्

संपादकीयम्

अस्माकं भारतदेशः अनेक सनातन सम्प्रदायानां जन्मगृहम्। वैदिकमते महालक्ष्म्याः अत्यन्तप्रमुखं स्थानं वर्तते। विद्यमानेषु षण्मतेषु शाक्तेयमपि एकम्। तत्र पराम्बिकायाः विविधेषु अवतारेषु महालक्ष्मीः अपि एका अवतारः। भारतदेशे विद्यमानेषु अष्टादशसु शक्तिपीठेषु करवीरपुरम् एकम्। तमेव इदानीन्तनकाले कोल्हापुरमिति आह्वयन्ति। भगवती महालक्ष्मीः कोलासुरनामकं दैत्यं विजित्त्य भक्तानाम् अनुग्रहार्थं पञ्चगङ्गातीरे शालग्रामशिलारूपेण स्थित्वा अधुनापि बहूनां भक्तजनानाम् अनुग्रहं कुर्वती अस्ति। तादृशमहालक्ष्म्याः अवतारः अस्मिन्नेव श्रावणमासे पूर्णिमायाः पूर्वम् सम्भवति भार्गववासरे अभवत् इति पुराणेषु वचनम्। विद्यमानेषु अष्टादशसु पुराणेषु स्कान्दपुराणमेकम्। तत्र पार्वतीपरमेश्वरयोः संवादकाले पार्वती स्वीयं भर्तारं परमेश्वरं भक्तानुग्रहकांक्षया यस्य व्रतस्य आचरणेन सकलसम्पत्सिद्धिः तथैव मोक्ष प्रप्तिश्च भवेत् इति पृष्टवती। तदानीं परमेश्वरः स्कान्दपुराणे विद्यमानवरमहालक्ष्म्याः व्रतानुष्ठान विधिम् उपदिदेश। कदा, कथं, कैः करणीयम् इत्यादिकं सर्वमपि परमेश्वरेण प्रोक्तम्।

अस्मिन् सन्दर्भे एव परमेश्वरः चारुमतीवृत्तान्तम् अकथयत्। चारुमती नाम एका गृहिणी पतिव्रतायाः धर्मान् सर्वान् पालयन्ती मगधराज्यस्य कुन्दिननगरे वसति स्म। महालक्ष्मीदेव्याः उपरि अत्यन्तभक्तिभावेन पूजनमपि करोति स्म। चारुमत्याः उपरि अनुग्रहेण महालक्ष्मीः स्वप्ने तस्याः साक्षाद् बभूव। भवत्याः पातिव्रत्यनियमाः माम् अत्यन्तम् अतोषयन्। तेन कारणेन अहं भवतीम् अनुग्रहीतुम् इच्छामि। भवती आगामिन्यां श्रावणमासस्य पूर्णिमायां पूर्वम् सम्भवति भार्गव (शुक्र) वासरे मदीयपूजां विध्युक्तप्रकारेण करोतु। इत्युक्त्वा अन्तर्धानमगात्। सा चारुमती निद्रातः झटति उत्थाय स्वीयस्वप्नवृत्तान्तं सर्वमपि पितृभ्याम् उक्तवती। तैः महता आनन्देन तथैव कुरु इति अनुज्ञा दत्ता। चारुमती तथैव शुक्रवासरे विध्युक्तप्रकारेण महालक्ष्म्याः पूजां कृतवती। समापनकाले महालक्ष्मीः साक्षात् तस्याः गृहे प्रादुरभूत्। तस्य अनेकान् वरान् दत्वा अन्तिमे काले स्वीयलोकं प्रति आगच्छतु इति वरमदात्। अमुं व्रतं जगन्माता पार्वती अपि आचर्य लोकशिक्षणां कृतवती। श्रावणमासे पूर्णिमायां चन्द्रः श्रवणानक्षत्रसमीपे भवेत्। तद् दिने सकलागमप्रतिपाद्यस्य भगवतः लक्ष्मीहयग्रीवस्य आविर्भवोत्सवः। ये भगवन्तं हयग्रीवं स्मरन्ति तेषां वाणी स्वर्धुनीव प्रवहति। श्री वैष्णवाचार्याणां मध्ये विशिष्टस्थानं प्राप्तवान् श्री वेदान्तदेशिकाचार्योऽपि लक्ष्मीहयग्रीवस्य मन्त्रबलेनैव सकलवेदसारं ज्ञातवान् तेषां कृते महासरस्वती प्रत्यक्षीभूय तस्याः उपास्यदेवस्य हयग्रीवस्य प्रतीकं दत्तवती। तद् इदानीमपि मैसूरुपट्टणे विद्यमानस्य ब्रह्मतन्त्रस्वतन्त्रपरकालमठस्य अधिष्ठानदेवत्वेन वयं द्रष्टुं शक्नुमः। अस्मिन्नेव मासे गरुडः स्वस्य मातृदास्यं व्यमोचयत्। जगद्गुरुत्वेन सकलैः सम्पूज्यमानः भगवान् श्री कृष्णोपि अस्मिन्नेव मासे जातः। तस्य जन्मोत्सवः अत्यन्तानन्देन सर्वत्र सश्लाल्यमानः वर्तते।

लोकाः समस्ताः सुखिनो भवन्तु।

तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०९ सञ्चिका-०५

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

# आगस्ट् २०२२

श्रीशुभकृत्संवत्सरस्य श्रावणशुक्लचतुर्थीतः
श्रीशुभकृत्संवत्सरस्य भाद्रपदशुक्लचतुर्थीपर्यन्तम् - १९४३





# सप्तगिरिः

**मुखचित्रम्** – श्री नवनीतकृष्णः, तिरुमल।
**अन्तिमरक्षापुटः** – श्रीमहालक्ष्मीः

गौरवसम्पादकः:-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः,
ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.



**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# श्रीकृष्णचारित्र्यमञ्जरी

- श्री के.शशिधराचार्यः
चरवाणी - ७९८१४०९३०४

श्रीमन्मध्वाचार्याः ''पुराणराज'' इति प्रथितस्य श्रीमद्भागवतमहापुराणस्य ''श्रीमद्भागवतात्पर्यम्'' इति नाम्ना व्याख्यानं चक्रुः। एवं महाभारतग्रन्थस्य श्रीरामायणग्रन्थस्य च ''श्रीमन्महाभारततत्पर्यनिर्णयः'' इति नाम्ना व्याख्यानं रचयन्तः अनर्घ्यान् निर्णयान् बोधयामासुः। तेषामेव परम्परायां राजमानाः मन्त्रालयक्षेत्रे वसमानाः श्रीराघवेन्द्रतीर्थश्रीचरणाः अपि बहून् ग्रन्थान् रचयन्तः संक्षेपरूपेण कांश्चन ग्रन्थान् व्यरचयन् श्रीरामायणग्रन्थस्य ''श्रीरामचारित्र्यमञ्जरी'' इति, श्रीमहाभारततात्पर्यनिर्णयस्य ''श्रीमन्महाभारततात्पर्यनिर्णय भावसङ्ग्रहः'' इति श्रीमद्भागवतमहापुरणे विद्यमानस्य दशमस्कन्धस्य श्रीकृष्णपरमात्मनः कथां सविस्तरं निरूपयतः ''श्री कृष्णचारित्र्यमञ्जरी'' इति।

श्रीमद्भागवतमहापुरणे विस्तृतः स्कन्धो नाम दशमः एव। तत्र सहस्रशः श्लोकाः वर्तन्ते। तेषां समेषामपि सारं श्रीराघवेन्द्रतीर्थश्रीचरणाः केवलं एकोनत्रिंशत् श्लोकेषु सञ्जगृहुः।

अस्य ग्रन्थस्य प्रवचनं तु बहुभिः कर्तुं शक्यं स्यात् परं सहस्राधिकसंख्याकानां श्लोकानाम् अर्थं संगृहीतुं वयं न प्रभवामः इति तु वादिमातङ्गकण्ठीरवख्यातिभिः बहुभिः दोषज्ञैः अङ्गीकृतोऽयमस्ति विषयः।

कीदृशी बुद्धिकुशलता अत्र कार्ये अपेक्षिता, कीदृशी वा तेषां महताम् सा आसीत् इतीमं विषयं गृद्ध्रदृष्ट्या पश्यामः।

अस्य ग्रन्थस्य आदिमः श्लोकोऽस्ति।

विष्णुर्ब्रह्मादिदेवैः क्षितिभरहरणे प्रार्थितः प्रादुरासीत्
देवक्यां नन्दनन्दी शिशुवधविहितां पूतनां यो जघान।
उत्थानौत्सुक्यकाले रथचरणगतं चासुरं पादघातैः
चक्रावर्तं च मात्रं गुरुरिति निहितो भूतले सोऽवतान्माम्॥

अस्मिन् प्रथमे एव श्लोके सङ्गृहीतः विषयः एवमस्ति। वसुधायाः नैकानि नामधेयानि सन्ति। तत्र अन्यतमं नाम ''सर्वसहा'' इति। तस्य कारणं सा उर्वी पादघातं मूत्रप्रभृति च सर्वं सहते इति। सा वसुमती कदापि एतेभ्यः कारणेभ्यः नैव खिन्ना जाता, परं एकदा भूमेरपि खेदो जातः। तस्य कारणं विष्णुं स्वभर्तारं द्विषन्तोऽसुराः। घनोदकसमुद्रात् आत्मानम् उद्धृतां कृतवान् श्रीहरिः, तस्मात् कारणात् सः पतिः भूमेः (वराहः)।



या स्त्री पतिव्रता भवति, सा पतिनिन्दकान् नैव सहते, अत्र केचन कवयः (श्री वादिराजतीर्थश्रीरचरणाः) वदन्ति - ''पतिव्रतानां अपरः क्व भारः'' इति। एतान् पतिनिन्दकानसुरान् वीक्ष्य सा खिन्ना सती, चतुर्मुखं पुरस्कृत्य गोरूपं धृत्वा क्षीरसागरस्थं श्रीहरिं प्राप्तवती। ततः ब्रह्मप्रभृतयः सर्वे देवाः पुरुषसूक्तेन श्रीहरिं स्तुत्वा (भू) भारेण खिन्नाम् एनां भूमिं विगतखेदां कर्तुं प्रार्थयामासुः। ततः श्रीहरिः ब्रह्माणं प्रति अदृश्यरूपेण अवादीत् यत् 'तेषां (युष्माकं) देवानां स्तुतिः सफला भविष्यति। अहमेव अवतीर्य भूभारभूतान् असुरान् हत्वा तां भूमिमनुगृह्णामि' इति। अयं विषयः केवलं चतुर्मुखेन श्रुतः, तेन देवाः ज्ञापिताः। सर्वेऽपि देवाः प्रसन्नमनसः अगमन् स्वस्थानम्।

अत्र च भूमौ कंसः स्वस्य अनुजां देवकीं वसुदेवाय प्रादात्। राजाऽपि कंसः देवक्याः सन्तोषजननार्थं स्वयं सारथिर्भूत्वा रथे तौ नूतनदम्पती उपवेश्य नयति स्म। तदानीं आकाशवाणी एतेन श्रुता यत् **''अस्यास्त्वामष्टमो गर्भः हन्ता यां नयसेऽबुध''** इति। हे मूर्ख कंस! यां देवकीं रथे आरोहयित्वा वैभवेन नयसि त्वं, तस्याः अष्टमः पुत्रः त्वां हनिष्यति इति तस्यार्थः। यदाऽयं कंसः आत्मनः हन्तारम् इयं देवकी प्रसूते इति शुश्राव, तदैव सः तां हन्तुं जगाम। परं वसुदेवः तं क्रूरं कंसं प्रतिबबन्ध आत्मनः मनोहारिभिः वचोभिः। तदेवं तेन वसुदेवेन प्रतिज्ञातं यत् - आत्मनः सर्वान् पुत्रान् तुभ्यं निवेदयिष्यामि इति। तच्छ्रुत्वा किञ्चित् अपहतमन्युः कंसः देवकीं वसुदेवं च कारगारे पातयामास। प्रथमं द्वितीयम् एवंक्रमेण षट्पुत्रान् वसुदेवः न्यवेदयत्कंसाय। कंसोऽपि तानहनत्। ततः शेषमाज्ञापयामास विष्णुः सप्तमगर्भरूपेण गन्तुम्। शेषोऽपि तदाज्ञामनुसृत्य देवक्युदरं प्रविवेश। तृतीयमासकालीनः गर्भः देवक्याः आसीत्। तदा विष्णुना आज्ञप्ता लक्ष्मीः तं गर्भं



**श्रीकृष्णजन्माष्टमी पर्वदिने ये उपवासेन भागवतपारायणादिपुरस्सरं श्रीकृष्णस्य पूजां, अर्घ्यप्रदानादिकं कुर्वन्ति, ते सकलाभीष्टं प्राप्नुयुरेव। तत्र सम्पूर्णं भागवतं न पठामः चेदपि तत्सारसङ्ग्रहभूतम् अमुं ग्रन्थं प्रतिदिनं पठित्वा माङ्गलिकाः भवेम। अल्पाल्पपक्षे श्रीकृष्णष्टमी पर्वदिने वा अर्थावलोडनपूर्वकं अस्य स्तोत्रस्य पारायणं कृत्वा अनन्तपुण्यभाजो भवेम। इदमेव मुख्योद्देश्यमस्य प्रबन्धस्य।**



कर्षयित्वा रोहिण्याः उदरे निक्षिप्तवती। कंसस्तु देवक्याः सप्तमो (गर्भः) बालकः गर्भे एव मृतः (गर्भस्रावो जातः) इत्यचिन्तयत्। ततः अष्टमगर्भरूपेण आकाशवाणीं सत्यां कर्तुमिव श्रीहरिः वसुदेवद्वरा देवकीं प्रविवेश। तदानीं देवक्याः मुखे विद्यमानां भासं दृष्ट्वा कंसः मम शत्रुः नूनमिदानीं अस्याः गर्भेऽस्ति इति विचिन्त्य सैनिकान् द्विगुणान् चकार। ततः **श्रावणमासे कृष्णपक्षे अष्टम्यां तिथौ रोहिणीनक्षत्रे निशीथसमये** स शिशुः श्रीहरिः प्रादुर्बभूव। श्रीहरेः देहः पाञ्चभौतिकः गर्भवासीयः इति नास्त्येव। ज्ञानानन्दमयः सः गर्भवासं अविद्यमानमेव उपदर्श्य गर्भात् निस्सृत इव आत्मानं प्रादुर्भूतं करोति। न तु तस्य अस्माकमिव देहप्राप्तिरूपा जनिः इति ज्ञापयितुमेव श्रीराघवेन्द्रतीर्थश्रीचरणैः ''प्रादुरासीत्'' इत्युक्तम् अन्यथा अजायत इत्यादिकमूचुः। तदैव श्रीहरिणा आज्ञप्ता लक्ष्मीः दुर्गारूपेण प्रादुर्बभूव नन्दगोपयशोदादम्पत्योः सकाशात्।

श्रीहरिश्च वसुदेवदेवक्यौ प्रति आत्मानं चतुर्भुजं सर्वाभरणभूषितं त्रिभुवनेशम् अजनकं सन्दर्श्य पुत्रभ्रमं न्यवारयत्। आज्ञापितावांश्च यत् आत्मानं नन्दगोकुलं नीत्वा तत्रत्या दुर्गा अनेतव्या इति। ततः श्रीहरिः द्विभुजः शिशुर्भूत्वा वसुदेवकरं प्राप। यदा





हरिं करेण जग्राह वसुदेवः तदा तस्य सर्वाणि बन्धनानि अपगतानि, द्वाराणि उद्घाटितानि, सैनिकाः निद्रां प्राप्ताः, कालिन्दी च मार्गमदात् वसुदेवाय। इमं प्रसङ्गं वदति कविः (श्रीवादिराजतीर्थश्रीचरणाः) ''करस्थदेवस्य कुतोऽन्तरायः'' इति। ततः श्रीहरिं तत्र विन्यस्य दुर्गां गृहीत्वा कारागारं प्राप्तवान् सः वसुदेवः। सर्वे अपगतनिद्राः जाताः। शिशोः



रोदनं श्रुत्वा शिशुं जातं निश्चित्य कंसम् अबोधयन्। ततः वेगेन आगत्य कंसः तं शिशुं हन्तुं प्रायतत, परं स शिशुः दुर्गारूपेण प्रादुर्भूत्वा **''कंसस्य तव हन्ता अन्यत्र वर्धमानः अस्ति''** इत्यब्रवीत्। ततः कंसः स्वभृत्यान् मन्त्रिणश्च आहूय सभायां विषयवृत्तमुवाच। मन्त्रिणां सूचना एवमासीत् हे कंस! अद्यारभ्य दशादिनाभ्यन्तरे ये शिशवो जाताः तव राज्ये तान् सर्वान् संहर, तेषु तव शत्रुरपि भवति, संहृतोऽपि भवति इति।

तदा तादृशसूचनासुारेण पूतनां प्रेषितवान् कंसः। **''पूतना बालघातिनी''** इति सा प्रसिद्धाऽसीत्। अतः तामेव प्रेषितवान् कंसः। पूतनायाः च कश्चन विशेषः आसीत् - सा पृच्छति चेत् काऽपि स्त्री स्वपुत्रं न ददामीति नैव वदति स्म। तस्याः पूतानायाः मायया मोहिताः सर्वाः अपि स्त्रियः पुत्रान् ददति स्म। पूतना च पयः स्वकीयं विषपूरितं पाययित्वा मारयति स्म। एवं सा कृष्णं प्राप्य पयोदाने प्रवृत्ता। तदा श्रीकृष्णः पयः पिबन्नेव तस्याः प्राणं च निष्पीड्यमानः सन् तामवधीत्।

ततः मासत्रयात् परम् उत्थानोत्सवः इति क्रियते। नूतनं शिशुं गृहात् बहिः तदैव आनीय देवमन्दिरं नयन्ति स्म जनाः। एवंविधे उत्सवसमये श्रीकृष्णः देवमन्दिरस्य पुरतः भूमौ निक्षिप्तोस्ति। तदा कश्चनासुरः (शकटस्य) रथस्य चरणं प्रविश्य श्रीकृष्णं संहर्तुकामः आसीत्। तदा मासत्रयवयस्कः श्रीकृष्णः तमसुरं संहर्तुं पादाभ्यां स्पृष्टवान् केवलम्। तदा रथचक्रगतः सः असुरः रथश्च महता वेगेन विनष्टः।

ततः कालान्तरे यशोदा स्तन्यं पाययती आसीत् कृष्णम् ऊर्वोरुपरि निधाय। तदा श्रीकृष्णः महाभारवान् जातः। तं भारं सोढुम् अशक्ता यशोदा श्रीकृष्णं भूमौ अस्थापयत्। तदा तृणावर्तनामाऽसुरः गोकुलं घोरेण (भीकरेण) वायुना आच्छाद्य, श्रीकृष्णम् उपरि (आकाशे) निनाय। सोऽपि यशोदा इव भारवन्तं श्रीकृष्णं सोढुं न शशाक। सोऽपि कृष्णमवतारयत्। तथा च यशोदा (माता) तृणावर्तः इति उभौ अपि एनं भारवन्तं गृण्हातुं न शशकतुः।

एवम्भूतः पूतनाघातकः, शकटासुरनाशकः, तृणावर्तनाशकः श्रीकृष्णः मां रक्षतु इति प्रथमश्लोकस्य अर्थः।

एवं बृहन्तः अर्थाः सर्वस्यापि श्लोकस्य वर्तन्ते। इदमुदाहरणमात्रम्।

एवंरीत्या संग्रहं कर्तुं विषयस्य स्फुटज्ञानं महत् कौशलं च अपेक्षितं भवति। तच्च एतद्ग्रन्थकर्तुः वर्तते एव इति विद्वतल्लजाः विद्यापक्षपातिनः सर्वेऽपि अङ्गीकुर्वन्ति। एतादृशान् सङ्ग्रहग्रन्थान् विरचय्य तत्त्वजिज्ञासुवृन्दस्य कृते महान्तम् उपकारं कृतवन्तः श्री राघवेन्द्रतीर्थश्रीचरणाः इत्ययं मुदावहो विषयः।



**पुनश्च एतादृशाः कृतीः बह्व्यः स्युः। तासां विषये च लेखकाः पाठकाः दृष्टिं सारयेयुः इत्यपि सूचना।**






**तेलुगुमूलम् - आचार्य चक्रवर्ति रङ्गनाथन्**

**अनुवादकर्त्री - डा. एम्.प्रफुल्ला , चरवाणी - ९४४०२८५९८५**

भगवान् पर, व्यूह, विभव, अन्तर्यामि, अर्चा इति पञ्चविधरूपैः दिव्यक्षेत्रेषु विराजमानः सकलजनान् अनुगृह्णाति। आल्वार् महाभागैः प्रकीर्तितेषु दिव्यक्षेत्रेषु तृतीयः, अत्यन्तदेदीप्यमानः, श्रीरङ्गसमीपस्थ तिरुक्करंबनूर् दिव्यदेशः।

**तिरुक्करंबनूर् दिव्यक्षेत्रपरिचयः -** एषः सहजरमणीयः दिव्यदेशः तिरुच्चिप्रदेशस्य उत्तरदिग्भागे प्रायः पञ्चकिलोमीटरदूरे **उत्तमर् कोयिल्** नाम्ना शोभते। एषः क्षेत्रः **आदिमापुरं, कदम्बवनं, पुच्चांडार् कोयिल्, नीभक्षेत्रं** इति विविधैः नामधेयैः अपि विख्यातः।

**नामसार्थकता -** अस्मिन् क्षेत्रे बहवः कदंबवृक्षाः आसन्। अतः कदम्बनूर् इति, कालक्रमेण करम्बनूर् इति च ख्यातः। कदम्बमहर्षेः तपसा संतुष्टः श्रीमन्नारायणः अस्मिन् क्षेत्रे प्रत्यक्षः बभूव। अस्मात् कारणादपि एषः देशः करम्बनूर् इति प्रसिद्धः इत्यपि कथनमस्ति।

**स्थलपुराणम् -** एतत् क्षेत्रं त्रिमूर्त्तिक्षेत्रमिति प्रसिद्धम्। अत्र पत्नीसहितहरिहरब्रह्मणां देवालयाः सन्ति। विशेषेण पार्वतीसहितपरमेश्वरः पिच्चांडार् नाम्ना, सरस्वत्या सार्धं चतुर्मुखब्रह्मा, पूर्णवल्लीनायिकनाम्ना विख्यातया लक्ष्म्या साकं पुरुषोत्तमन् नाम्ना नारायणः च विराजन्ते। स्थलपुराणमनुसृत्य हरः, ब्रह्मा च अत्र पुरुषोत्तमस्य नारायणस्य अनुग्रहं प्राप्तवन्तौ। उत्तमर् कोयिल् देवालयः जनकमहाराजेन निर्मितः इति ज्ञायते।

**पूर्णवल्लीनायिका-** पुरा ब्रह्मा पंचमुखैः आसीत्। एकदा परमेश्वरः अहंकारेण गर्वितं पञ्चमं मुखं दृष्ट्वा कोपोद्रिक्तः स्वनखैः कर्तितवान्। अनेन ब्रह्मणः गर्वः खण्डितः। परन्तु ब्रह्मणः शिरःखण्डनात् परमेश्वरः ब्रह्महत्यापापेन लिप्तः। अपिच खण्डितः ब्रह्मणः शिरः परमेश्वरस्य नखाग्रे सक्तः आसीत्। यस्मिन् देशे तव नखलग्नः एषः कपालः ओदनेन पूर्णः भवति तत्र तव ब्रह्महत्यापापः नश्यति इति अशरीरवाणीं श्रुत्वा परमशिवः सर्वाणि क्षेत्राणि संचरन् करंबनूर दिव्यदेशसमीपमगच्छत्। नारायणः परमशिवं ब्रह्महत्यापापात् मोचयितुं संकल्पितः सन् तम् अनुग्रहीतुं महालक्ष्मीं पूर्णवल्लीनायिकास्वरूपं ग्रहीतुं आदिष्टवान्। नारायणस्य आदेशमनुसृय महालक्ष्मीः पूर्णवल्लीनायिकारूपिणी भूत्वा करंबनूर् क्षेत्रमागतवती। तत्रागतस्य शिवस्य करलग्नकपालं अन्नेन पूरितवती। तदारभ्य महालक्ष्मीनिजदर्शनार्थमागतानां भक्तानां मनोरथान् पूरयन्ती पूर्णवल्लीनायिकारूपेण विख्याता। नारायणादेशमनुसृत्य गर्वभङ्गानन्तरं ब्रह्मा सरस्वतीसहितः सन् शिलारूपेण संस्थितः। तथैव भिक्षार्थमागतः शिवः पिच्चांडार् नाम्ना पार्वत्या सह तत्रैव स्थितः। एषा अस्य क्षेत्रस्य महिमा।

**कदम्बतीर्थाविर्भावः -** ब्रह्महत्यादिमहापापनाशकं, महिमान्वितम् इदं क्षेत्रं द्रष्टुम् एकदा चतुर्मुखब्रह्मा आगतवान्। तत्र नारायणस्यादर्शनेन चिन्ताक्रान्तमेकं कदम्बवृक्षमपश्यत्। नारायणः सर्वान्तर्यामीति ज्ञात्वा ब्रह्मा कदम्बपुष्पस्थितं नारायणं कमण्डलुजलेन अभ्यषिञ्चत्। अनेन जलेन जातं कदम्बतीर्थम्। तदनन्तरं सः नारायणस्य दर्शनं प्राप्तवानिति स्थलपुराणम्। अस्मिन् तीर्थे मज्जनात् जनः सर्वपापविमुक्तः भवतीति असंशयः।

**तिरुमंगै आल्वार्वागमनं-** आल्वारुमहाभागेषु अन्तिमः अस्ति तिरुमंगै आल्वारुः। एषः महाभागः एतत् क्षेत्रं गत्वा तत्रस्थं देवं पुरुषोत्तमं साक्षात् श्रीरङ्गनायकं इति विनिश्चित्य इत्थं मंगलाशासनं कृतवान् -

**पेरानै कुरुन्गुडि .... आरादेन्निरुन्दानैक्कण्डदुतेन्नरंगत्ते**
**(तिरुमंगै आल्वार् पे.ति.मो. ५-६-२)**

एवं तिरुमंगै आल्वारुः देवं स्तुत्वा अनिर्वचनीयमानन्दं प्राप्तवान्।

**पुरुषोत्तमपेरुमाल् मूर्त्तिः -** अस्मिन् क्षेत्रे प्रचीदिशि शयानः पुरुषोत्तममूर्त्तिः दृश्यते। एषः मूर्त्तिः श्रीरंगनाथमूर्त्तिसदृशः। देवालये भगवतः दक्षिणदिग्भागे पूर्णवल्ली तायार् दृश्यते। एतत् क्षेत्रं महागुरुस्थानवत् विराजते।

तिरुमंगै आल्वारुः एतत्क्षेत्रस्थस्य पुरुषोत्तम पेरुमाळ् स्वामिनः, पूर्णवल्ली तायार् देव्याः, कदम्बतीर्थस्य, उद्योगविमानस्य, प्राचीदिशिस्थ भुजंगशायिनः, स्थलवृक्षस्य, कदलीवृक्षस्य, सनकसनन्दादीनां, कदम्बमहर्षेः, उपरिचरमहाराज्ञः श्रीमन्नारायणस्य च दर्शनं - इत्यादीन् एवं कीर्तितवान् -

**रंभावृक्षयुतो ..... कलिद्वेषिभिः॥** इति।

सर्वे जनाः एतत् पवित्रक्षेत्रं गत्वा पूर्णवल्लीनायिकासहितपुरुषोत्तमपेरुमाल् स्वामिनः अनुग्रहं प्राप्य धन्यतां प्राप्नुवन्तु।

लोकाः समस्ताः सुखिनो भवन्तु।





# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

**तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु**

**संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः**

(तदनन्तरम्) **चरवाणी - ९४९४२४८३४८**

भक्तप्रह्लादः तुभ्यं किं दत्तवान्? शुकमहर्षिः तुभ्यं किम् उपकारं कृतवान्?, नारदः तुभ्यं किं सुखम् अदात्?, रुक्माङ्गदः कां तृप्तिं दत्तवान्?, विभीषणः तुभ्यं किं साहाय्यं कृतवान्? नरपुण्डरीकः तुभ्यं किं दत्तवान्? ध्रुवः तव कृते किमुपकारं कृतवान्? शौनकादयः तुभ्यं किं कृतवन्तः? ते सर्वेऽपि भवन्तं भक्त्या सेवन्ते। तथैवाहमपि, परन्तु अहम् एकः एव तुभ्यं परोऽभवम् वा स्वामिन्?

**दासर मनेयल्लि वासवगिद्दवनानु**
**दासर बळियल्लि सेरि कोंडव नानु**
**दासर मनेयल्लि नीरु पोत्तवनानु**
**दासर मने यंजलेले तेगेदव नानु**
**दासरुडद्दु उंडु वेळेदवनानु**
**दासर मने मुंदे रात्रि जागर नानु**
**दासर नंबिद दासनु नानु**
**दोषि नानादडे दोषरहित पुण्य-**
**राशि पुरंदर दासरम्याले दयविट्टु**
**नी सलहु एन्न पाशव बिडिसुत्त**
**लेसुपालित नम्म विजयविटलराय**
**बीसिबीसाडदिरु बिंकदवैदव॥**

गुरुभक्तितत्पराः विजयदासवर्याः भगवन्तम् एवं प्रार्थयन्ति - हे स्वामिन्! भवान् माम् न अनुगृह्णाति चेदपि मम गुरुदेवं पुरंदरदासं दृष्ट्वा अनुगृह्णातु। अहं पुरन्दरदासवर्यस्य गृहे आसम्। तस्य निकटे आसम्। पुरन्दरदासवर्यस्य गृहे अवश्यकं जलम् अहमेव आनीतवान्। दासवर्यस्य गृहे भोजनानन्तरम् उच्छिष्टपत्राणि मया एव निष्कासितानि। तेषां गृहस्य पुरतः अहं जागरितोऽभवम्। तैरेव अहं संवर्धितः। हे स्वामिन्! भवान्! दोषरहितं पुण्यराशिं पुरन्दरदासं प्रति दयां प्रदर्शितवान् यथा तथा माम् अपि संरक्ष्य एनं भवपाशम् उत्पाटयतु।

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्** इति प्रमाणवचनमनुसृत्य इतिहासपुराणयोः साहाय्येन वेदप्रतिपाद्यमानं विषयं ज्ञात्वा भगवन्तं श्रीहरिं भजते। आर्ताः विजयदासवर्याः स्वकीयं पूर्वस्थितिम् एकवारं स्मृत्वा अश्रुपरिपूरितनयनो भूत्वा एनं प्रार्थयति हे स्वामिन्! चतुर्दशलोकरक्षकाय भवते अहं भारोऽभवम् वा? इति प्रार्थयन् पुराणेतिहासेभ्यः दृष्टान्तान् उदाहरन् भगवन्तं प्रार्थयति। अयं विषयः कठिनपाषाणहृदयमपि अवश्यं करुणरसयुक्तं करोति।

**हदिनाल्कु लोकवनाळुव तंदेगे**
**मुददिंद नानोब्ब भारनादेने॥**

चतुर्दशभुवनपालकाय पित्रे भवते अहं भारो वा?

**सुरगरियु शरधियोलु कडिवागमुणुगलु**
**भरदिंद पोगि बेन्नांतु पोत्ते।**
**धरणियु मोरेयिडलु तेरळल्लिबंदु भू -**
**तरुणियनु सेरेबिडिसि उळुहिकोळ्ळलिल्लवे॥**

पूर्वं यदा देवदानवाः क्षीरसागरमथनं कृतवन्तः तदा मन्दरगिरिं भवतः उपरि स्थापितवान्। तथैव यदा भूदेवी प्रार्थितवती तदा सपदि प्रत्यक्षीभूत्वा तं राक्षसं दत्वा तां रक्षितवान् किल! (कूर्मावतार - वाराहवतारयोः वर्णनम्)

(अनुवर्तिष्यते)

# विविधगणपतयः

विघ्नेश्वरः,एकदन्तः,क्षिप्रप्रसाद इत्यादिनामकः गणपतिः तं ध्यायतः भक्तान् सदा रक्षति। अतः तस्य द्वात्रिंशत्सु बालादिनामसु षोडश चित्रध्यानश्लोकसहितानि प्रदत्तानि। तथा च भक्ताः इमान् ध्नानश्लोकान् पठित्वा इष्टार्थं प्राप्नुयुः गणेशानुग्रहेणेतीच्छया यथावकाशं निर्दिष्टोयं समाहारः...



## श्री बालगणपतिः

करस्थकदलीचूतपनसेक्षुकमोदकम्।
बालसूर्यनिभं वन्दे देवं बालगणाधिपम्।।



## श्री तरुणगणपतिः

पाशाङ्कुशापूपकपित्थजम्बूस्वदन्तशालीक्षुमपि स्वहस्तैः।
धत्ते सदा यस्तरुणारुणाभः पायात् स युष्णांस्तरुणो गणेशः।।



## श्री भक्तगणपतिः

नारिकेलाम्रकदलीगुडपायसधारिणम्।
शरच्चन्द्राभवपुषं भजे भक्तगणाधिपम्।।



## श्री वीरगणपतिः

वेतालशक्तिशरकार्मुकचक्रखड्गखट्वाङ्गमुद्गरगदाङ्कुशनागपाशान्।
शूलं च कुन्तपरशुं ध्वजमुद्वहन्तं वीरं गणेशमरुणं सततं स्मरामि।।



## श्री शक्तिगणपतिः

आलिङ्ग्य देवीं हरिताङ्ग्यष्टिं परस्पराशिलष्टकटिप्रदेशम्।
सन्ध्यारुणं पाशसृणी वहन्तं भयापहं शक्तिगणेशमीडे॥



## श्री द्विजगणपतिः

यं पुस्तकाक्षगुणदण्डकमण्डलुश्रीविद्योतमानकरभूषणमिन्दुवर्णम्।
स्तम्बेरमाननचतुष्टयशोभमानं त्वां यः स्मरेत् द्विजगणाधिपते स धन्यः॥



## श्री सिद्धगणपतिः

पक्वचूतफलपुष्पमञ्जरीरिक्षुदण्डतिलमोदकैः सह।
उद्वहन् परशुमस्तु ते नमः श्रीसमृद्धियुतहेमपिङ्गलः॥



## श्री उच्छिष्टगणपतिः

नीलाब्जदाडिमीवीणाशालीगुञ्जाक्षसूत्रकम्।
दधदुच्छिष्टनामायं गणेशः पातु मोचकः॥



## श्री विघ्नगणपतिः

शङ्खेक्षुचापकुसुमेषुकुठारपाशचक्रस्वदन्तसृणिमञ्जरिकाशरौघैः।
पाणिश्रितैः परिसमीहितभूषणश्रीविघ्नेश्वरो विजयते तपनीयगौरः।।



## श्री क्षिप्रगणपतिः

दन्तकल्पलतापाशरत्नकुम्भाङ्कुशोज्ज्वलम्।
बन्धूककमनीयाभं ध्यायेत् क्षिप्रगणाधिपम्।।



## श्री हेरम्बगणपतिः

अभयवरदहस्तः पाशदन्ताक्षमालासृणिपरशु दधानो मुद्गरं मोदकं च।
कलमधिगतसिंहः पञ्चमातङ्गवक्त्रो गणपतिरतिगौरः पातु हेरम्बनामा।।



## श्री लक्ष्मीगणपतिः

बिभ्राणः शुकबीजपूरकमिलन्माणिक्यकुम्भाकुशान्
पाशं कल्पलतां च खड्गविलसज्ज्योतिः सुधानिर्झरः।
श्यामेनात्तसरोरुहेण सहितं देवीद्वयं चान्तिके
गौराङ्गो वरदानहस्तसहितो लक्ष्मीगणेशोऽवतात्।।



## श्री महागणपतिः

हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं रसा-
दाशिलष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम्।
बीजापूरगदेक्षुकार्मुकलसच्चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशान् हस्तैर्वहन्तं भजे।।

## श्री विजयगणपतिः

पाशाङ्कुशस्वदन्ताम्रफलवानखुवाहनः।
विघ्नं निहन्तु नः सर्वं रक्तवर्णो विनायकः।।





## श्री नृत्तगणपतिः

पाशाङ्कुशापूपकुठारदन्तचञ्चत्कराक्लुप्तवराङ्गुलीकम्।
पीतप्रभं कल्पतरोरधस्थं भजामि नृत्तोपपदं गणेशम्।।

## श्री ऊर्ध्वगणपतिः

कल्हारशालिकमलेक्षुकचापबाणदन्तप्ररोहकगदी कनकोज्ज्वलाङ्गः।
आलिङ्गनोद्यतकरो हरिताङ्गयष्ट्या देव्या करोतु शुभमूर्ध्वगणाधिपो मे।।



भागः -१५

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - बि.गिरीशकुमारः
चरवाणी - ९९८९६५७५७६



(तदनन्तरम्)

ननु देहे स्नेहः वर्तते इति कृत्वा तन्नाशे दुःखमनुभूयते सत्यमेव। किन्तु कतिषु देहेषु एवमेव स्नेहः अस्तीति विचारणीयः। यतो हि - यदि एकः एव देहः प्राप्यते, तन्नाशे पुनः देहप्राप्तिः न भवति चेत् तदा देहे स्नेहः युक्तः भवति। किन्तु अस्मात् पूर्वं कति देहाः प्राप्ताः इति न जानीमः। इतःपरं कति प्राप्स्यामः इत्यत्रापि नास्ति निश्चयः। एवं स्थितौ देहे स्नेहः यः वर्तते सः कियान् समुचित इति विचारणीयः। यथा पर्वदिनेषु नूतनवस्त्राणि धृत्वा आनन्दम् अनुभवति बालकः। किन्तु तेन सन्तुष्टः इति कारणात् सर्वदा तान्येव धर्तुं शक्यन्ते वा? न। तद्वेदेव देहविषयेऽपि चिन्तनीयः। वस्त्राणि इव देहानि च जीर्णानि भवन्तीति त्यजामः।

न कस्यापि पुरुषस्य धृते वस्त्रे स्नेहः, अपि तु स्वस्मिन्नेव । यदि धारकस्य स्थाने देहं स्वीकुर्मः चेत् कति स्वीकृताः कति त्यक्ताः इत्यपि वक्तुं न शक्यते। तथा च अनेन ज्ञायते यत् अस्माकं प्रीतिः देहविषये न, अपि तु स्वस्मिन्नेव इति। किन्तु सः स्नेह (प्रीतिः) कीदृशः इति सम्यग् न अधिगतवान्। अतः एवं भाषमाणोऽसि। सर्वेषामपि मानवानां स्वस्वानुकूलपदार्थेषु स्नेहः भवति। यत् अनुकूलतया भवति तस्मिन् स्नेहः, यन्न भवति तस्मिन् द्वेषः भवति। यावता अयं देहः अनुकूलतया भवति तावतपर्यन्तं अस्मिन् देहे स्नेहो भवति। शरीरम् एतदावश्यकमिति भाति। यदि अस्मात् वियोगो जायते पश्चात् किं भवतीति वक्तुं न शक्नुमः। यतो हि एतावता कति देहाः प्राप्ताः, कति त्यक्ताः इत्यापि न जानीमः। तस्मात् हे अर्जुन! देहे स्नेहः अस्तीति मा चिन्तयतु। वस्तुतः तव आत्मन्येव स्नेहः अस्ति। किन्तु तदात्मस्वरूपं यथार्थतया नावगतवानसि। त्वया एतदवगन्तव्यम्

**वासांसि जीर्णानि.... अन्यानि संयाति नवानि देही।।**

मनुष्यः यथा पुराननानि जीर्णानि वस्त्राणि विसृज्य नूतन वस्त्राणि धरति, तथैव जीवात्माऽपि जीर्णानि शरीराणि विहाय नूतनशरीराणि प्राप्नोति।। अयमात्मनः स्वभावः। धृतं शरीरं यावत्पर्यन्तं भवति इति वक्तुं न शक्नुमः।

अपि तु यावत्पर्यन्तं नूतनानि शरीराणि स्वीकरोति इति वक्तुं शक्यते। यावत् पर्यन्तं जीवस्य तत्त्वज्ञानं न भवति, तावत्पर्यन्तं नूतनानि शरीराणि स्वीकरोति। तत्वज्ञानानन्तरं पुनः नूतनानि न स्वीकरोति। तस्मात् नश्वरेषु शरीरेषु स्नेहः अयुक्तः। केवलं आत्मनः विषये एव स्नेहः भवेत्। तज्ज्ञातुमेव प्रयत्नः करणीयः। न तु अन्येषु अयथार्थविषयेषु।

**वासांसि जीर्णानि** इति श्लोकोक्तः विषयः कठोपनिषदि यमेनापि प्रतिपादित इति श्रुतवन्तः। तथा हि - **योनिमन्ये प्रपद्यन्ते** इति श्रुत्या यमः नचिकेतसं वदति। स्वस्वकर्मानुसारं जीवः भिन्नभिन्नशरीराणि प्राप्नोति इति। पुनः स एव विषयः रीत्यन्तरेण अस्मानवगमयति। विभिन्न शरीरेषु प्राप्तेषु सत्स्वपि देही जीवः एक एव अस्ति। यदि जीवः एक एव भवति चेत् देहोऽपि एक एव भवतु इति चेन्न। स्वस्वकर्मानुगुण्येन देहाः भवन्ति एव। (अनुवर्तिष्यते)



# आयुर्वेददृशा
## जीवनपद्धतिः

- श्री जोषि भरद्वाजः
चरवाणी - ९९१२६५९७०७

अस्मिन् संसारे सर्वे जनाः स्वस्थं जीवनम् इच्छन्ति। मनुष्यस्य स्वस्थजीवनस्य इच्छां पूरयितुम् एव महर्षयः आयुर्वेदशास्त्रस्य उपदेशं चक्रुः। आयुः वेदयति अर्थात् बोधयति इति आयुर्वेदः। यत् शास्त्रम् आयुषः ज्ञानं कारयति तत् शास्त्रं आयुर्वेदशास्त्रम् इति कथ्यते। अस्मिन् शास्त्रे प्रधानतया स्वस्थजीवनाय अपेक्षितविषायाः उपलभ्यन्ते। अतः स्वस्थजीवनं ये इच्छन्ति तेषाम् इदं शास्त्रम् अत्यन्तमुपकारकं भवति।

उक्तश्च अष्टाङ्गहृदये -

**आयुः कामयमानेन धर्मार्थसुखसाधनम्।**
**आयुर्वेदोपदेशेषु विधेयः परमादरः।।** इति।

अस्य अभिप्रायः, यः जनः धर्मस्य अर्थस्य सुखस्य साधनरूपम् आयुः इच्छति तेन श्रद्धया आयुर्वेदशास्त्रस्य अध्ययनं कर्तव्यम्। तत्रोक्ताचाराः निष्ठया पालनीयाः इति।

आयुर्वेदशास्त्रस्य मुख्यतया द्वे प्रयोजने स्तः **स्वास्थ्यरक्षणं, रोगस्य उपशमनम्** इति। तर्हि स्वस्थः कः भवति इति चेत् - यस्य जनस्य शरीरे वातः, पित्तं, कफः एते त्रयः दोषाः समावस्थायां भवन्तिः, पुनः त्रयोदशाग्नयः इत्युक्ते जठराग्निः, पञ्चभूताग्नयः, सप्तधात्वग्नयः एते त्रयोदशाग्नयः समरूपेण भवन्तिः, यस्य शरीरे रसः, रक्तं, मांसं, मेदः, मज्ञा, अस्थि, शुक्रं एते धातवः तथा मूत्रपुरीषादीनां मलानाम् उत्सर्जनक्रियाः समानरूपेण तिष्ठन्तिः, पुनः यः प्रसन्नः भवति; यस्य पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि स्वस्वकार्यं सम्यक् कुर्वन्ति; मनः प्रसन्नं भवति सः स्वस्थः इति।

उक्तश्च -

**समदोषः समाग्निश्च समधातुमलक्रियः।**
**प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते।।**

यदा धातूनां स्थितिः साम्या वर्तते तदा स्वास्थ्यं सम्यक् भवति। धातूनां समावस्थासिद्ध्यर्थं आहरे दृष्टिः प्रसरणीया। तदर्थं षड्भिः रसैः युक्तानाम्, तथा विंशति गुणैः युतानाम् आहारद्रव्यणां यथोचितं भक्षणं कर्तव्यम्। कदाचित् केनचित् एकेन रसेन गुणेन वा युतस्य आहारस्य अधिकतया भक्षणे तत्सम्बद्धः धातुः वर्धते। एवं सति स्वास्थ्यं नश्यति। अतः तद्विरुद्धेन रसेन वा गुणेन युक्तस्य आहारस्य भक्षणं कर्तव्यम्। तदा धातुसाम्यं सिद्ध्यति आरोग्यमपि।

उक्तं च -

**एतावदेव हि भैषज्यप्रयोगे फलमिष्टं स्वस्थवृत्तानुष्ठाने च यावद्धातूनां साम्यं स्यात्। स्वस्था अपि धातूनां साम्यानुग्रहार्थमेव कुशला रसगुणानाहारविकारांश्च पर्यायेणेच्छन्त्युपयोक्तुं सात्म्यममाज्ञातान्, एकप्रकारभूयिष्ठां चोपयुञ्जानाः तद्विपरीतसमाज्ञातया चेष्टया सममिच्छन्ति कर्तुम् इति।**

षड्रसेषु रसानां सेवनक्रमस्तु - मधुररसस्य सेवनात् कफस्य वृद्धिः भवति, अतः तस्य सेवनस्य अनन्तरं वर्धितस्य कफस्य शमनार्थं कटु-तिक्त-कषायरसानां सेवनं कर्तव्यम्।

एवमेव अन्येषाम् अपि रसानां सेवनस्य क्रमः भवति।
षड् रसाः - मधुरः,आम्लः, कटुः, तिक्तः, कषायः, लवणः।

**रसाः स्वद्वाम्ललवणतिक्तोषणकषायकाः।।**

विंशतिगुणानां सेवनक्रमः - गुरुगुणयुक्तम् आहारद्रव्यं विलम्बेन जीर्णं भवति। अतः गुरुगुणयुक्तस्य आहारद्रव्यस्य सेवनानन्तरं तस्मात् विपरीतस्य लघुगुणस्य आहारद्रव्यस्य सेवनं करणीयम्। एवमेव गुणानां उपयोगस्य क्रमः द्रष्टव्यः। विंशतिगुणाः - गुरुः, लघुः, मन्दः, तीक्ष्णः, हिमः, उष्णः स्निग्धः, रुक्षः, श्लक्ष्णः, खरः, सान्द्रः, द्रवः, मृदुः, कठिनः, स्थिरः, चलः, सूक्ष्म, स्थूलः, विशदः, पिच्छिलः।

**गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः।**
**गुणाः ससूक्ष्मविशदाः विंशतिः सविपर्ययाः।।**

आहारविकारणां क्रमः - खाद्यस्य आहारद्रव्यस्य सेवनं कृत्वा तस्य पचने सहायकस्य पेयद्रव्यस्य सेवनं कर्तव्यम्। एवमेव अन्येषाम् अपि आहारविकारणां क्रमः चिन्तनीयः। भक्ष्यं, खाद्यं, लेह्यं, पेयम् इत्येते आहारभेदाः आहारविकाराः।

**आद्यखाद्यलेह्यपेयरूपाः यवाग्वादयः।।**

उक्तं च - **स च क्रमो यथा मधुरमुपयुज्य तज्ञन्यकफवृद्ध्यादिप्रतिबन्धार्थं कट्वाद्युपयोज्यमित्यादि रसक्रमः तथा गुरुमुपयुज्य तत्कार्यप्रतिबन्धार्थं लघूपयोग इत्येवम्प्रकारो गुणानामुपयोगक्रमः, आहारविकारेष्वपि खाद्याद्युपयुज्य तत्पाकार्थं पेयाद्युपयोगः इत्यदिकः क्रमः।।**

एवं च शरीरे विद्यमानानां धातूनां साम्यावस्थायाः रक्षणार्थं स्वस्थः जनः देशस्य कालस्य स्वसामर्थ्यस्य च अनुगुणं कर्म कुर्यात्। जनः सर्वासु कर्मसु अतियोगं वर्जयेत् अर्थात् आहारं विहारम् इन्द्रियैः विषयाणां सेवनं वा आधिक्येन न कुर्यात्। जनः मूत्रस्य पुरीषस्य तथा च अन्येषाम् अपि वेगानाम् अवरोधं न कुर्यात्। साहसिकानि (दुःसाहसयुक्तानि) कर्माणि न कुर्यात्। एवं स्वस्थवृत्तस्य सम्यक् आचरणेन धातूनां सम्यगवस्था रक्षिता भवति। तेन जनाः स्वस्थाः भवन्ति।

उक्तं च -

**देशकालात्मगुणविपरीतानां हि कर्मणामाहार विकारणां च क्रियोपयोगः सम्यक् सर्वातियोगसन्धारणम्**



**असन्धारणमुदीर्णानां च गतिमतां, साहसानां च वर्जनं, स्वस्थवृत्तमेतावद्धातूनां साम्यानुग्रहार्थमुपदिश्यते।।**

पुनः कः अरोगः भवति? स्वास्थ्यरक्षणार्थं किं कर्तव्यम् इति चेत् - यः जनः सर्वदा हितकरस्य चिन्तनं करोति, सर्वदा हितकरं कर्म करोति,किं कर्तव्यं न कर्तव्यम् इति सम्यक् विचार्य कार्यं करोति, यस्य इन्द्रियाणाम् उपभोगेषु रूपरसादिषु आसक्तिः न भवति, यः स्वस्य शक्तेः अनुसारं योग्येभ्यः जनेभ्यः धनादिद्रव्याणां दानं करोति, यः सर्वान् जनान् समानरूपेण अवलोकयति अर्थात् परस्परं भेदभावं न करोति, यः सत्यं वदति, क्षमावान् भवति, अनुभवयुक्तानां श्रेष्ठजानानां गुरूणाञ्च वचनपालनं करोति सः जनः एव रोगरहितः भवति।

जनानां स्वास्थ्यरक्षणार्थं दिने क्रियमाणानि कर्माणि दिने एव करणीयानि, रात्रौ करणीयानि कर्माणि रात्रौ करणीयानि, प्रत्येकम् ऋ तौ करणीयानि कर्माणि तस्मिन् ऋतौ करणीयानि। एवं यः क्षमया क्रमेण दिनचर्यादीनां पालनं करोति, सः सर्वदा रोगरहितः स्वस्थः तिष्ठति। अन्यथा रोगोण पीडितः दुःखम् अनुभवति।

उक्तञ्च -

**नित्ये हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः।**
**दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः।।**
**मानवो ये न विधिना स्वस्थस्तिष्ठति सर्वदा।**
**तमेव कारयेद्वैद्यो यतः स्वास्थ्यं सदैप्सितम्।।**
**दिनचर्यां निशाचर्यामृतुचर्यां यथोदिताम्।**
**आचरन् पुरुषः स्वस्थः सदा तिष्ठति नान्यथा।।**



# वित्तस्य गुणः

**- श्रीमती विजया भट्**




पुरा कस्मिंश्चित् ग्रामे उभौ सुहृदौ वसतः स्म। एकः सोमः अपरः श्यामः। अथैकदा उभयोर्मध्ये धनस्य विषये महती चर्चा आरब्धा। अन्ते साकूतं श्यामेन प्रोक्तम् - ''धनसञ्चयनं कृत्वा कुत्रापि स्थापयेत् चेदेव तस्य वर्धनं भवेत् - उत न'' इति।

तावता सोमः प्रत्यवदत् - ''कथं वर्धनं भवेत् कुत्रापि धनं स्थापयति चेत्? वर्धनं न भवेदेव। संविचिन्त्य धनं कार्यार्थम् उपयुज्येत चेदेव तस्य वृद्धिर्भवेत्'' इति।

एवं दीर्घकालं वादविवादं कुर्वन्तौ सोमश्यामौ अन्ते कमपि पृच्छाव इति तृतीयमन्विष्यन्तौ गच्छन्तौ आस्ताम्।

मध्येमार्गं कश्चन रामो नाम अधनः सोमश्यामयोः दृष्टिगोचरमागतः। श्रमजीवी सः इति तेन सह सम्भाषणेन ताभ्यां परिज्ञातम्। अतः तयोर्मध्ये उद्भूतां समस्यां परिहर्तुं रामः एव योग्यः पुरुषः इति सोमश्यामाभ्यां निरचीयत।

अन्ते श्यामः तस्मै निर्धनाय किञ्चित् धनं दत्वा अवदत् - ''भोः! धनं प्रदास्यामि। स्वीकुरु। कुत्रापि सुरक्षिततया स्थापय। यावत् पर्यन्तं धनं तव सकाशे भवेत् तावत् पर्यन्तं त्वं धनिको भवेः। अतः जागरूको भव'' इति।

तदनु समोश्यामौ ततः निर्गतवन्तौ। प्राप्तधनः रामः - ''अहो मम भाग्यम्! मम कष्टानि सर्वाणि परिहृतानि। धनिकः अभवम्। किन्तु धनं कुत्र स्थापयेयम्? गृहे चोरादयः आगत्य लुण्ठनं कुर्युः। मया एव तं सर्वत्र नीयेत चेदपि तस्य अपहरणस्य सम्भवः भवेदेव। परं किं वा कुर्याम्'' इति बहुधा अचिन्तयत्। अन्ते उपायान्तरमपश्यता चिन्ताग्रस्तेन रामेण धनं स्वस्य शिरस्त्राणे संस्थाप्य सर्वत्र गन्तुं निरचीयत। एकस्मिन्नहनि पाथेयपात्रं स्वीकृत्य शिरस्त्राणं जागरूकतया शिरसि संस्थाप्य सः कार्यार्थं बहिः अगच्छत्। तावता तस्य पाथेयं दृष्ट्वा कश्चन विहगः तम् अपहर्तुमुद्युक्तः। परन्तु रामः पाथेयपात्रम् इतोऽपि दृढेन गृहीत्वा अचलत्। तदानीं कुपितः विहगः रामस्य शिरस्त्राणम् एकपदे अपहृत्य उड्डयते स्म। सः साहाय्यार्थम् अन्यान् उच्चैः आहूतवान्। तथापि न कोऽपि अग्रे आगतः।

तावता तत्र सोमश्यामौ आगतवन्तौ। तौ निरूप्य अधनः तयोः पादान् गृहीत्वा - हे स्वामिनौ! मां रक्षताम्। मम धनं नष्टं जातम्। विहगेन धनापहरणं कृतम्। अधनः अहं किं वा कुर्याम् अधुना... इति वदन् बहुधा विलपितवान्।

रामस्य वचनान्याकर्ण्य सोमः सोल्लासं हसित्वा श्यामम् अकथयत् - ''भोः श्याम! पश्य। धनं कथं नष्टं जातम्। वृद्धिरपि न अभवत्। यदि सुरक्षितया संस्थाप्य वृद्धिं प्राप्नुयुः तर्हि जनाः केऽपि वाणिज्यव्यवहारे न प्रवर्तेरन् किल? सर्वे भूमौ एव कुत्रापि धनं स्थापयेयुः'' इति।

एवं वदता सोमेन अधनाय धनं दत्त्वा कृषिकार्ये उपयोक्तुम् आदिष्टम्। वर्षाभ्यन्तरे एव धनस्य वृद्धिं प्राप्नुवन् रामः धनिको जातः।

**संविचिन्त्य व्ययीकृतं चेदेव वित्तस्य वृद्धिः। न तु एकत्र सञ्चयनेन।**



चित्रकथा

# विनायकचतुर्थ्यां शशाङ्कदर्शने....!

तेलुगु मूलम् - डा.कंपल्ले रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - कुमारी एस्.अभिक्या
चरवाणी - ९४४०२१७१४६
















हे रुक्मिणि! अपवायं दूरीकर्तुं गच्छन् अस्मि! तावत्पर्यन्तं विनायकव्रतम् आचार! अहं शीघ्रं प्रतिनिवृत्तो भवामि!
अस्तु.... नाथ!


श्रीकृष्णः कानने अन्विषन् प्रतस्थौ! स्यमन्तकमणिः जाम्बवता सङ्गृहीतः इति जानाति श्रीकृष्णः। तदा जाम्बवतः गुहं जगाम।
हे जाम्बवन्...! तं मणिं प्रत्यर्पय!
न ददामि चेत् ....


युद्धं निश्चयम्...
अस्तु युद्धमेव मम प्रियम्।




श्रीकृष्ण एव श्रीरामचन्द्रः इति जाम्बवान् विवेद!
महात्मन्! अम्यताम्! मणिना साकं मम पुत्रीं जाम्बवतीं च स्वीकुरु!


अयि भो सत्राजित! भवतः स्यमन्तकमणिं स्वीकरोतु!
हे कृष्ण! क्षम्यताम्। शमन्तकमणिना समं सत्यभामामपि स्वीकरोतु!


श्रीकृष्णः भार्याभिः सह विनायकव्रतं नियमानुसारम् आचार्य अपवादात् विमुक्तः। वर्षे एकवारं यः चतुर्थीदिने विनायकपूजां करोति, चन्द्रं च न पश्यति सः निन्दाविहीनो भूत्वा, धनधान्यादिकं सम्प्राप्य सुखाशान्त्यादिना श्रीकृष्णवत् विलसति!
स्वस्ति
अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...




# तिरुमलतिरुपतिदेवस्थानानि



ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

## लघुप्रश्नोत्तरी

१. कृष्णाष्टमी कस्मिन् मासे भवति?
२. कृष्णचारित्र्यमञ्जरी कस्य ग्रन्थः?
३. कृष्णचारित्र्यमञ्जरी कस्य भागवतभागस्य सङ्ग्रहग्रन्थः?
४. तिरुक्करम्बनूर् कुत्र वर्तते?
५. सामूहिकविवाहोत्सवः इदानीं कतमः पर्यायः?
६. विवाहार्थं किं पश्यन्ति।
७. संस्काराः कति?
८. विवाहः कतमः संस्कारः?
९. रसाः कति?
१०. योनिमन्ये इत्यादिश्रुतिः कुत्र वर्तते?
११. इतिहासपुराणाभ्यां कं समुपबृंहयेत्?
१२. दासवर्यः सुरगिरियु इत्यादिना कयोः वर्णनमकरोत्?
१३. आहारे कति गुणाः?
१४. आयुर्वेदशास्त्रस्य मुख्यप्रयोजने के?
१५. वित्तस्य वृद्धिः कथं भवति?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं **The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507,** प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः **(Xerox)** नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः **(Subsribers)** भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तानां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. **Chief Editor** कार्यालयीयकार्यकर्तृपुत्रपत्रिकानां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।

**Subscription Number** :
**Name** :
**Mother** :
**Father** :
**Address** :
**Phone Number** :

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?

## चित्रलेखनम्



## परस्परं योजयत

| | |
|---|---|
| १. श्रीकोदण्डरामस्वामिनः आलयः | क. तिरुचानूरु |
| २. श्रीकल्यणवेङ्कटेश्वरालयः | ख. अप्पलायगुण्ट |
| ३. श्री कपिलेश्वरालयः | ग. श्रीनिवासमङ्गापुरम् |
| ४. श्रीप्रसन्नवेङ्कटेश्वरालयः | घ. तिरुपतिः |
| ५. श्री पद्मावतीदेव्यालयः | ङ. कपिलतीर्थम् |

समाधानानि - १. घ, २. ग, ३. ङ, ४. ख, ५. क

## भेदाः कुत्र?





Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.




ति.ति.दे. अमेरिकामध्ये शान् फ्रान्सिस्को प्रदेशे आचरितस्य श्रीनिवासकल्याणमहोत्सवस्य दृश्यम्। तत्र च ति.ति.दे., पालकमण्डल्यध्यक्षाः श्री वै.वी.सुब्बारेड्डि महाभागाः सपत्नीकाः भागं गृहीतवन्तः।



ति.ति.दे., अमेरिकामध्ये सियाट् प्रदेशे आचरितस्य श्रीनिवासकल्याणमहोत्सवस्य दृश्यम्। तत्र च ति.ति.दे., पालकमण्डल्यध्यक्षाः श्री वै.वी.सुब्बारेड्डि महाभागाः सपत्नीकाः भागं गृहीतवन्तः।






अचिरात् ति.ति.दे. अमेरिकामध्ये सेयिण्ट् लूईस्, डल्लास् प्रदेशयोः आचरितस्य श्रीनिवासकल्याणमहोत्सवस्य दृश्यम्। तत्र च ति.ति.दे., पालकमण्डल्यध्यक्षाः श्री वै.वी.सुब्बारेड्डि महाभागाः सपत्नीकाः भागं गृहीतवन्तः।



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 20-07-2022 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

समागच्छ समागच्छ ममाग्रे भव सुस्थिरा।
करुणारसनिष्यन्दनेत्रद्वयविलासिनी।।

(श्रीलक्ष्मीहृदयस्तोत्रम्)